श्रीः

# अरुणाचलपञ्चरत्नदर्पणम्

## श्रीभगवद्रमणमहर्षिप्रोक्तस्य अरुणाचलपञ्चरत्नस्य व्याख्या

[भारद्वाजेन कपालिना रचिता]




[प्रथमं मुद्रापणम्]

श्रीरमणाश्रमम् अरुणाचलम्

१९४३

श्रीः

# अरुणाचलपञ्चरत्नदर्पणम्

## श्रीभगवद्रमणमहर्षिप्रोक्तस्य
## अरुणाचलपञ्चरत्नस्य
## व्याख्या




श्रीरमणाश्रमसर्वाधिकारिणा
निरञ्जनानन्दस्वामिना
प्रकाशितम्

१९४३

 [मूल्यम् ०-२-०



भगवान् श्री रमण महर्षिः

श्रीः

# ॥ अरुणाचलपञ्चरत्नदर्पणम् ॥



## ॥ श्रीरमणध्यानम् ॥

नीलारविन्दसुहृदा सदृशं प्रसादे
तुल्यं तथा महसि तोयजबान्धवेन ।
ब्राह्म्यां स्थितौ तु पितरं वटमूलवासं
संस्मारयन्त मचलं त मनुस्मरामः ॥



नामंनाममिदं धाम रमणं नाम भामताम् ॥
पञ्चानां पद्यरत्नानां प्रशस्तिं प्रारभामहे ॥१॥

अरुणाचलकारुण्यवैभवादर्शविग्रहाम् ॥
प्रणुमः संहतिं भासां भवान्धतमसद्रुहाम् ॥२॥

अद्भुतं तन्महत्किञ्चिदरुणाचलसंज्ञकम् ॥
इति धी रस्य धीरस्य काचिदाबाल्यभासिनी ॥३॥

स्वरूपबोधसम्पन्नं धात्रीव जनकान्तिकम् ॥
कुमारमेनमानैषीदरुणाचलसन्निधिम् ॥४॥

सोऽयं महर्षिर्भगवानगासीदरुणाचलम् ॥
आर्यागीतिभिरार्याणां वाण्या पञ्चभिरुज्वलम् ॥५॥

अशिक्षितोऽपि गैर्वाणीच्छन्दोलङ्कृतिरीतिषु ॥
दर्शनेनापरोक्षेण श्रवणादन्तरश्रुतेः ॥६॥

दुर्ग्रहाण्यपि तत्त्वानि सुग्रहाण्यादधन्मुनिः ॥
रोचयन्कमनीयेन काव्यबन्धेन गीतवान् ॥७॥

दीप्तया पञ्चरत्नस्य प्रभया यः प्रकाश्यते ॥
चिनुमस्तं समासेन रमणीयार्थसञ्चयम् ॥८॥

अरुणाचलसम्बुद्धिः पञ्चस्वपि च गीतिषु ॥
परमात्मनि रक्तानां रतिं धत्ते रसोत्तराम् ॥९॥

हृदयस्य प्रसादः स्याद् ईश्वरस्य प्रसादतः ॥
तदिहाद्येन पद्येन स्तूयते करुणार्णवः ॥१०॥

नित्यः समाश्रयो विश्वस्यात्मा विश्वं तु नश्वरम् ॥
हृदयस्थः स हृदयं द्वितीये प्रतिपादितम् ॥११॥

अहमोऽन्वेषणादन्तर्दृढया शुद्धया धिया ॥
स्वात्मबोधात्परा शान्तिस्तृतीये परिकीर्तिता ॥१२॥

बहिर्विषयहानेन मनःप्राणनिरोधतः ॥
अन्तर्ध्यानयुतो योगी पश्यति ज्योतिरीश्वरे ॥१३॥

महिमा स महेशस्य चतुर्थे सम्प्रगीयते ॥
एवं ज्ञानं च योगं च प्रसादाप्तिपुरस्सरम् ॥१४॥

परनिःश्रेयसप्राप्ते रुपायं भगवानृषिः ॥
सङ्कीर्त्य पञ्चमे प्राह परमां भक्तिमन्तिमे ॥१५॥

समर्प्य चित्तं सर्वेशे विश्वस्मिन्पश्यतः परम् ॥
एकान्तभक्तेः सिद्धस्य गीता सम्पदनुत्तमा ॥१६॥

परमात्मगमध्वान- मेवं चरितमात्मना ॥
दर्शयन्देशिकेन्द्रोऽय- मस्तौषीद्रमणः परम् ॥१७॥

अनुग्रहसमारम्भा- मात्मसिद्धिकथां निजाम् ॥
महर्षेर्द्योतयन्नेष स्तोत्रराजो विराजते ॥१८॥

तदिदं भगवता रमणेन महर्षिणा गीर्वाणवाण्या आर्यागीतिभिः गीतं अरुणाचलपञ्चरत्नं नाम पद्यपञ्चकं

व्याख्यास्यते । अरुणाचलपञ्चरत्नं–'पञ्चानां रत्नानां पद्यश्रेष्ठानां समाहारः पञ्चरत्नं' अरुणाचलस्य पञ्चरत्नं, प्रतिपादकत्व-सम्बन्धे षष्ठी । अरुणाचलनिरूपितप्रतिपादकत्वसम्बन्धवत्पद्यरत्नपञ्चकमिति यावत् । तस्येदमाद्यं पद्यं भवति—

करुणापूर्णसुधाब्धे
कबलितघनविश्वरूप किरणावल्या ॥
अरुणाचलपरमात्मन्
अरुणो भव चित्तकञ्जसुविकासाय ॥१॥

करुणेति– करुणया अनुकम्पया पूर्णः समृद्धः करुणापूर्णः, सुधायाः अमृतपदवाच्यायाः अब्धिः समुद्रः सुधाब्धिः, करुणापूर्णश्चासौ सुधाब्धिश्च करुणापूर्णसुधाब्धिः तस्य सम्बुद्धिः । किरणावल्या मयूखमालया, कबलितघनविश्वरूप! कबलितं घनं विश्वस्य रूपं येन तस्य सम्बोधनम् । निजारुणप्रभापूरमज्जद्ब्रह्माण्डमण्डल इत्यर्थः । अरुणाचलपरमात्मन्! अरुणाचल एव परमात्मा तस्य सम्बोधनम् । अरुणः सूर्यवाची ज्योतिष उपलक्षणम् ।

तथा चेदं तैजसलिङ्गक्षेत्रमाहुः स्थलपुराणविदः । अचलः अपि अक्षरवाची । तस्मादक्षरस्य ज्योतिषः परमात्मनः सम्बोधनं बोध्यम् । तच्च ज्योतिरक्षरं परमात्मपद-व्यवहार्यं चित्तकमलविकासाय भासतामिति चतुर्थचरणेन प्रार्थयते । चित्तकञ्जसुविकासाय चित्तं हृदयमेव कञ्जं तस्य सुविकासाय शोभनाय विकासाय त्वं अरुणः सूर्यो भव । पद्मायमानस्य हृदयस्य पद्मबान्धवायस्व भगवन्निति प्रार्थना ॥

करुणापूर्णेत्यत्र करुणा अनुग्रहदृष्टिर्भवति । अनुग्रह-विधानसमृद्धिं लक्षयितुं करुणापूर्णत्वमुक्तम् । सत्यामपि अनुग्रहदृष्टौ सामग्री ह्यपेक्ष्यते, यया सा निरूढव्यापारा कृतकृत्या स्यात् । सा च परमात्मनः स्वरूपं अमृतमेव सिद्धम् । येन कारुण्यमाश्रितेष्वमोघं भवति । शोक-मोहादेर्मृत्योरमृतं हि भेषजम् । अव्ययमनवधिकमिति द्योतयितुमब्धिरित्युक्तम् । अनुग्रहदृष्टिसमृद्धं शोकमोहादि-मृत्युप्रध्वंसनं अव्ययमनवधिकममृतं परमात्मनः स्वरूपं इत्यर्थः ॥

अरुणाचलपदेनाक्षरं ज्योतिरभिप्रेतं व्याख्यातम् । तस्य किरणावल्या कबलितेत्यनेन, अलौकिकेन ज्योतिषा

विश्वं व्याप्य स्थीयत इति बोध्यम् । 'घनं' इन्द्रियग्राह्यं स्थविष्ठं तेजसा अभेद्यप्रायं अन्तस्तमस्सान्द्रमिति द्योत्यते । इयदनवधिकाकाशविचरद्बहुलगोलं विश्वस्य रूपं ग्रासमात्रतया गृह्यते, अतः सहजशक्तिविशेषेणांशमात्रेणेदं विश्वं सजीवं भुनक्तीति बोधयितुं 'कबलनं' प्रायुञ्जि ॥

एकः परमात्मा अमृताम्भोधिः कारुण्यास्पदस्य शोक-मोहादिमृत्युग्रस्तस्य लोकस्य, विश्वकबलनज्योतिर्मयः स्वयमप्रकाशस्य बहुलब्रह्माण्डस्य घनस्य विश्वरूपस्य, अचलः सर्वेषु चलत्सु सोऽयमिति प्रत्यभिज्ञानहेतुरशेषस्वप्रचारसाक्षी, अरुणः कमलायमानस्य हृदयस्य- एवं सुधाब्धिः ज्योतिर्मयः अचलः सूर्य इत्येकस्य परमात्मनो बहुधोल्लेखनं हृदयङ्गमं काव्यरसिकानाम् । अयमुल्लेखो नामालङ्कारः । किरणावलिपदेन अलौकिकमयूखमालिन आक्षेपः । चरमपादे च रूपकम् । तस्माद्रूपकोल्लेखयोस्तिलतण्डुलन्यायेन मेलनात् संसृष्टिः ॥१॥

एवं कृपासमुद्रस्य परमात्मनोऽनुग्रहमभ्यर्थ्य तस्य साक्षात्कार्यतां सर्वकारणतां स्वरूपं नाम चोपपादयति द्वितीयेन—

त्वय्यरुणाचल सर्वं
　　भूत्वा स्थित्वा प्रलीनमेतच्चित्रम् ॥
हृद्यहमित्यात्मतया
　　नृत्यसि भोस्ते वदन्ति हृदयं नाम ॥२॥

त्वयीति– अरुणाचल, भोः ज्योतिर्मयाक्षर भगवन्! त्वयि अधिष्ठाने आधारे वा, एतत्सर्वं परिदृश्यमानमिदं, चित्रं आलेख्यं, भूत्वा भवं प्राप्य, स्थित्वा स्थितिं लब्ध्वा, प्रलीनं विलयं गतं च भवतीति शेषः । सोऽसि त्वं, यतः एतस्य सर्वस्य जगद्रूपचित्रस्य जन्मस्थितिभङ्गं भवति । अनेन जगदपेक्षया परमात्मस्वरूपं लक्षितम् । सर्वस्यास्य चित्रत्वोक्त्या अरुणाचलस्य चित्रपटस्थानीयत्वमाक्षिप्यते । जगतो वैलक्षण्यं द्योतयितुं जगदित्यनुक्त्वा एतत्सर्वमिति निर्दिश्य तत्र चित्रत्वमारोपितम् । तेन चित्रस्थानीयं जगत् चित्रपटस्थानीयं परमात्मानमरुणाचलमन्तरा न गृह्यत इति गम्यते । जगच्चित्रयोः साधर्म्यं तु कलानिर्मितिरिति वाच्यम् । चित्रकलानियमानुसारेण आलेख्यं विरच्यते । सर्जनकलानियमानुसारेण जगन्निर्मीयते ॥

यद्वा, अचले त्वयि चलं सर्वमेतत् जन्मान्तवद्भवतीत्येतत् चित्रं विचित्रमाश्चर्यम् । चलाचलयोस्तमःप्रकाशयोरिव विरोधेऽप्यघटितघटनापटीयसा शक्तिविशेषेण त्वत्तोऽस्य सर्वस्योदयास्तमयदर्शनात् । त्वदन्यतोऽस्य जगच्चित्रस्य न अस्ति कारणसामग्रीति द्योतयितुं त्वयीति सप्तमी । यद्यपि ब्रह्माण्डकोटिचित्रस्याधारतया तवावस्थानं भवति, तथाऽपि तस्य सर्वस्य निमित्तं त्वमन्तर्ज्वलसीत्युत्तरार्धेनाह ॥

आत्मतया आत्मनो भावः आत्मता तया, आत्मभावेन हृदि हृदये दहरे आकाशे अहमिति नृत्यसि । अस्मि इत्यहमिति रूपावतारः औणादिकमदिक्प्रत्ययपरकादसेः धातोरस्मच्छब्दनिष्पत्तेः । भोः भगवन्! हृदये अस्मीति निरन्तरं नर्तनं कुरुषे । अतो हेतोः ते तव नाम हृदयं वदन्ति विज्ञा इति शेषः । अहमिति निरन्तरस्फुरणमेव नर्तनम् । सत्येवास्मीति स्फुरति द्रष्टरि, अस्य सर्वस्य दर्शनं सम्भवति । तत्रैव जगच्चित्रदर्शनादर्शनयोर्व्यवहारः सम्पद्यते । परमात्मनो नित्यत्व मनित्यता जगत श्चानेन प्रतिपादिते । बाह्यस्य जगदाकारचित्रस्याधिष्ठानतयाऽखण्डस्वरूपस्य साक्षात्कारस्तावन्न भवति, यावच्चित्रदर्शनं भवति । चित्रदर्शनान्निवृत्तायां दृष्टौ चित्रफलकस्थानीयमखण्डस्वरूपं

केवलानन्तदृष्टिरेवावशिष्यते । सा च अस्मिताप्रत्ययास्पदं हृदयं भवति । तदेवाहम्पदलक्ष्यार्थः अरुणाचलाख्यः परमात्मा, यस्मिन्नुदयास्तमयौ लोकानां, यस्यैव नर्तनात् अन्तर्वृत्तीनां बहिर्विषयाणां च व्यवहारः ॥

अत्र श्लोके पूर्वार्धेन जगतः तत्कारणस्यारुणाचलस्य च चित्रतदाधारात्मकः सम्बन्धः प्रतिपादितः । उत्तरार्धेन जीवस्य तदाश्रयतयाऽवस्थितस्यारुणाचलस्य च स्वरूपात्मकः सम्बन्धः प्रतिपादितः । एवं जगदाधारतया जीवरूपतया च यस्यावस्थानं, तस्यारुणाचलस्याहम्पदपरमार्थभूतहृदय-शब्दवाच्यत्वमुक्तम् । अत एवोक्ता तस्य सहजनर्तनक्रिया । इमामेव मायामाहुरेके, यया सर्वभूतानि भ्रामयन्नीश्वरो हृदये तिष्ठतीति गीतासु गीतम् ॥२॥

अथाहमर्थभूतेनात्मभावेन नृत्यन्नरुणाचलोऽपरोक्षः चेत् स कथं साक्षात्कार्यः? अतस्तत्साधनमाह तृतीयेन—

अहमिति कुत आयाती-
त्यन्विष्यान्तः प्रविष्टयाऽत्यमलधिया ॥
अवगम्य स्वं रूपं
शाम्यत्यरुणाचल त्वयि नदीवाब्धौ ॥३॥

अहमिति— अहमिति धीः स्मृतिर्वा कुतः कस्मात् आयाति आगच्छति? उदेतीति यावत् । इति अन्तः प्रविष्टया अत्यमलया धिया अन्विष्य विचित्य स्वं रूपं अहमः परमार्थ स्वरूपं अवगम्य बुद्ध्वा, भोः अरुणाचल-भगवन्! त्वयि शाम्यति शान्तो भवति अहङ्कारी जीव इति शेषः । अब्धौ सागरे नदीवेत्युपमानेन अहन्धियः परमात्मनि शान्तिरुक्ता । 'अहं ब्रह्माऽस्मि' इत्यादिवृत्ति-विचारनिरपेक्षं स्वरूपान्वेषणं साक्षात्साधनं निरालम्बमुप-दिष्टम् । सर्वस्याप्यहमस्मीति प्रत्ययप्रसिद्धेः, अहम्प्रत्ययात् परतरस्यासिद्धेश्च अहमोऽन्वेषणेन स्वरूपावगतिर्भवति । अन्वेषणक्रिया तु अहन्धियैव साध्यते । तस्या एव स्वरूपावगतिप्रवृत्तेः । अहन्धियां वृत्तिविक्षिप्तायां स्वरूप-जिज्ञासैव न जायते । तस्यां स्वरूपादन्यत्र वृत्तिषु विषयेषु वा चलन्त्यां सत्त्वमशुद्धं भवति । तीव्रजिज्ञासया प्रेरिता अहन्धीः सर्वार्थतायामविमूढा स्वच्छा स्वरूपमन्वेष्टुं प्रवर्तते । अत एव 'अन्तः प्रविष्टयाऽत्यमलधिया' इत्युक्तम् ॥

अत्र साधकः साधनं सिद्ध इति त्रिकेऽप्यहम्पदार्थ एव बोध्यः । विशेषविवेकस्त्वेवम् । अहम्पदवाच्यार्थः आत्माभासस्त्वहङ्कृतः स्वरूपजिज्ञासुरेव साधकः, स्वरूपा-

न्वेषणपरा शुद्धसत्त्वा अहन्धीरेव साधनम् । आत्मा हृदयनामा सत्ताप्रत्ययाश्रयः अस्मीति हृदि स्फुरन् केवलः अपरोक्षानुभवोऽहम्पदलक्ष्यार्थः एव स्वतःसिद्धो भवति । एवं साधनस्यादौ मध्ये अन्ते सिद्धौ च निरन्तरमहमेव अप्रतिहतार्थो भवतीत्यवगन्तव्यम् । अथ सर्वासां वृत्तीनां अव्ययोऽहमर्थो गतिरिति बोधनाय नदीनां सागरो गतिः इवेत्यौपम्यमुक्तम् । अम्भोधिसङ्गमादनन्तरं यथा नद्याः पृथक्सत्ता व्यापारो वा नास्ति, तथा अहमि स्वरूपं प्राप्ते शान्तिरखण्डा भवति पुनरावृत्तिर्न विद्यते । 'साधकोऽहं सिद्धोऽहं' इति अहन्द्वयं नेति बोधयितुं 'सोऽहमस्मि' इति द्रढयितुं 'स्वं रूपमवगम्य शाम्यति' इत्युक्तम् ॥३॥

इदं च स्वात्मान्वेषणरूपं साक्षात्साधनमत्यन्तपक्कानां एकेषामेव सुकरम् । येषां अन्तःकरणवृत्तयो बाह्येन विषयेणाबाधिताः अन्तर्मुखतयाऽवतिष्ठन्ते, तेषां अन्तः प्रविष्टया शुद्धया धिया स्वरूपान्वेषणमुपदिष्टम् । येषां पुनर्बाह्ये सक्तं चित्तं तेषां साधनमुपदिशति चतुर्थेन पद्यरत्नेन—

त्यक्त्वा विषयं बाह्यं

रुद्धप्राणेन रुद्धमनसाऽन्तस्त्वाम्  ॥

ध्यायन्पश्यति योगी
दीधितिमरुणाचल त्वयि महीयं ते ॥४॥

त्यक्त्वेति– भोः अरुणाचल परमात्मन्! योगी प्राणरोधेन चित्तरोधे प्रवृत्तः बाह्यं विषयं रूपादिं जाग्रत्प्रज्ञभूमिं, त्यक्त्वा विहाय, रुद्धप्राणेन रुद्धेन संयतेन प्राणेन वायुना कुम्भकेनेति यावत्, रुद्धमनसा रुद्धेन निगृहीतेन मनसा मनोनिग्रहेणेति यावत्, त्वां परमं अन्तः हृदये ध्यायन् प्रणिदधानः, त्वयि अधिष्ठाने दीधितिं किरणं ज्योतिरित्यर्थः, पश्यति साक्षात्कुरुते । 'इयं ते मही' इयं योगिजनान्तर्ध्यानगम्यज्योतिःस्वरूपा ते तव मही चित्प्रकाशभूरित्यर्थः । यस्यां चित्प्रकाशभूमिकायां मनःप्राणसंयमवान् योगी अन्तरात्मध्यानेन स्वरूपं ज्योतिः पश्यति, सा तव महत्तेति भावः । बाह्यविषयकलुषितस्य मनसोऽन्तर्मुखता बाह्यविषयसङ्गत्यागेन साधनीया । प्राणशुद्धिः क्वचिद्विषयसङ्गप्रध्वंसाय प्रभवति । अत एव रुद्धप्राणेनेत्युक्तम् । अपक्वपुरुषस्य प्राणः भोगेच्छापरतन्त्रो भवति, तमनुधावति मनश्च । प्राणरोधेन विषयान्निवृत्तिः सुकरा । मनश्च तेन वशयितुं शक्यमिति प्राणशुद्धिः मनःशुद्धिश्च प्राणायामादियोगाङ्गतयाऽभ्यस्येते योगिना ।

विषयसङ्ग एव अशुद्धिः। तस्मान्निवृत्तिरिष्यते। तदुपायो मनःप्राणरोध-साधनविशेषबलात् सम्पाद्यत इत्युक्तम्। केवलमनःप्राणरोधात्तु न वस्तुसिद्धिः। तस्मादन्तर्ध्यानं उक्तम्। यद्यन्तर्मुखत्वं प्रागेव परिपाकवशाद्विषयाकृष्टेः बलीयो भवेत्, मनोरोधो यावदपेक्षमयत्नतः सिद्धस्स्यात्। अन्तर्ध्यानोपकारित्वं मनःप्राणयोरवगन्तव्यम्। न तु तावतैव स्वरूपावगतिः। ताभ्यामन्तर्गाढाभ्यां लयाख्यः समाधिविशेष एव सिध्येत्, न तु आत्मबोधः। स च अहमः परमार्थसाक्षात्कारेण भवति, न पुनरहमो विस्मारकेण लययोगादिना। तस्माद्यदहमिति स्मृतेर्भानस्थानं गमयति, तत्सर्वं साधनाङ्गतया स्वीकार्यमित्याशयेन ज्ञानाध्वनि भक्तिमता योगिना प्राणसंयम-मनोनिग्रहोपायः अभिमन्यते ॥

दीधितिं पश्यतीत्यनेन शुद्धान्तःकरणसचिवेन अन्तर्ध्यानेन युक्तस्य हृदये ज्योतिर्दर्शनं भवतीत्युक्तम्। इदं च ज्योतिरलौकिकं परमात्मन्यरुणाचले स्वरूपे हृदये नित्यं अस्मीति स्फुरतोऽहमर्थस्य प्रकाशकं बोध्यम्। नेह दृग्दृश्यभेदाभ्युपगमाद्द्वैतापत्तिः शङ्क्या। अन्तर्ध्यानगम्यस्य हृदयज्योतिष आत्मनोऽनन्यत्वात्। अहंवृत्तेरन्यैव ह्यहंस्फूर्तिः।

स्वरूपं ध्यायन्ती अहंवृत्तिरहंस्फूर्तौ पर्यवस्यतीति बोध्यम् । वृत्तिस्फूर्त्योरेव भेदो न त्वहमीति ग्राह्यम् । अपि च ज्योतिर्दर्शनमात्मदर्शनान्नातिरिच्यते । दर्शनं च साक्षात्कारः । प्राग्वस्तुसिद्धेर्ध्यायतः पुंसो ज्योतिर्दर्शनं हृदये परमात्मन्येव सम्पद्यते । ध्यातृध्येयात्मकद्वैतस्य हृदि उपसंहार इति सिद्धान्तं द्रढयति 'त्वयि पश्यति' इति प्रयोगः । 'इयं ते मही' इत्युक्त्या, एवं योगिध्यानगम्यज्योतिर्भूमिः अखण्डचित्स्वरूपस्य अरुणाचलस्येति प्रतिपादितम् ॥४॥

अथ चैकान्तभक्तेरात्मसाक्षात्कारसम्पन्नस्य पुरुषस्य विश्वं प्रति स्वरूपादनन्यत्वेनानुभवे सिद्धे, तस्यान्तर्बहिर्वा अखण्डस्वरूपं प्रत्यक्षं भवतीति तस्य सिद्धपुरुषस्य स्थितिं महिमानं च पञ्चमेन पद्यरत्नेनाह—

त्वय्यर्पितमनसा त्वां
पश्यन्सर्वं तवाकृतितया सततम् ॥
भजतेऽनन्यप्रीत्या
स जयत्यरुणाचल त्वयि सुखे मग्नः ॥५॥

त्वयीति– भोः अरुणाचल! त्वयि परमात्मनि अर्पितमनसा अर्पितेन मनसा अन्तःकरणेन सर्वं विश्वं तवाकृतितया त्वत्स्वरूपभावेन सततं देशतः कालतश्च निरन्तरं पश्यन् य इत्यध्याहार्यं चतुर्थचरणे तच्छब्द-प्रयोगाद्यत्तदोर्नित्यसम्बन्धाच्च, यः पुरुषः त्वामनन्यप्रीत्या एकान्तभक्त्या भजते सेवते आश्रयत इत्यर्थः, स तथाविधः सुखे आनन्दस्वरूपे त्वयि मग्नः शुद्ध्यर्थकान्मज्जतेः क्तः शुद्धः गाढमाप्लुत इत्यर्थः जयति उत्कर्षेण वर्तते । सोऽयं सिद्धः पुरुषः यो जीवन्नेव मुक्तो जयति, यस्मिन् मानुषं जन्म परमं साफल्यं लभते, यस्य मनः सम्पूर्णं परमात्मनि समर्पितं तदनन्यतया विलसति, यस्य चक्षुः परमात्मानं अखण्डस्वरूपं सर्वत्र पश्यति, यश्च बहिरन्तर्वा अपरोक्षं आत्मान मात्मारामो भजन् अखण्डानन्दस्वरूपे निमग्नो विजयते ॥५॥

पञ्चवक्त्रभाक्पञ्चरत्नकृ-
　　द्भूमिमण्डलीमङ्गलायताम् ॥
रमणदेशिको यमवतां विभु-
　　र्विजयतेतरां विजयतेवराम् ॥*॥



आर्षी रमणवागेषा श्रुतिर्वेषान्तरस्थिता ॥
स्तुतिर्वेदशिरोभूषा मुमुक्षूणां मुदावहा ॥१॥

नानारुचीनां चित्तानां रोचनार्थां शिवङ्करी ॥
द्वैताद्वैतादिवादाना- मुपसंहारदर्शिनी ॥२॥

ज्ञानेन भक्त्या योगेन येन केनापि वाऽध्वना ॥
ईप्सतां परमं धाम सामरस्यविधायिनी ॥३॥

भक्तिर्भक्तश्चभगवा- निति यस्य दृढा मतिः ॥
तस्येयं कल्पलतिका भजनैकार्थसाधिका ॥४॥

भरन्यासप्रपत्तिभ्यां भजने चेन्मतं तव ॥
सखे रहस्यं तस्येह दृश्यतामुत सेव्यताम् ॥५॥

पतिः पशुः पाश इति त्रेधा तव मति र्यदि ॥
स्वरूपमिह निर्दिष्टं बुद्ध्वा पाशाद्विमोक्ष्यसे ॥६॥

हरो हरिरिति द्वेधा भज्यतां वा परात्परः ॥
प्रत्ययावेव भिद्येते प्रकृतिर्न कदाचन ॥७॥

परवस्तुनि सन्देहो भ्रातस्त्वां मैव बाधताम् ॥
सन्दिहानं विचिन्वानः परस्मिँल्लीयते ध्रुवम् ॥८॥

लयाद्विनष्टिशङ्का चेत् स्वरूपे परमात्मनि ॥
बुध्यस्व मातरं तस्या अहम्मतिपिशाचिकाम् ॥९॥

अहमोऽन्वेषणादेषा भ्रान्तिः सर्वा पलायते ॥
स्वात्मनिष्ठो यतो जीवन्बन्धान्मुक्तो विजेष्यते ॥१०॥

अशक्तिश्चेत्स्वमन्वेष्टु- माश्रयस्वात्मवित्तमम् ॥
प्रसरन्ती प्रभा यस्य ज्वलयत्यभितो मतान् ॥११॥

निःश्रेयसपरा सैषा भाषा भगवतो मुनेः ॥
जयत्वासूर्यमाचन्द्रं पञ्चरत्नस्तवात्मिका ॥१२॥

लब्धिदं पञ्चरत्नस्य निर्मितं मितविस्तरम् ॥
गुरुप्रशस्तिसम्पुष्टं व्याख्यानं हृदयङ्गमम् ॥१३॥

ऋज्वर्थदर्शनं यत्र न गतिः कुटिलाध्वगा ॥
भानुबिम्बमिव स्वच्छे दर्पणे प्रतिभासते ॥१४॥

अभीष्टं गुरुपादाना- मिदमासीन्न पूरितम् ॥
तत्प्रभावानुबिम्बेन तच्छिष्येणाद्य तत्कृतम् ॥१५॥

रमणाङ्घ्रिसरोजात- रसज्ञेन कपालिना ॥
काव्यकण्ठमुनेरन्ते- वासिना वाग्विलासिना ॥१६॥

कृता रमणपादाब्जकिङ्करस्यापि किङ्करता ॥
सती व्याख्या सतां प्रीत्यै रमणस्येव कल्पताम् ॥१७॥

सम्प्रसादमाधुरीधुरीणभव्यभानुभिः
पुष्णतोर्विभास्तमांसि मुष्णतोर्मदन्तरे ॥
मौनसारसम्पदो महर्षिपादपद्मयोः
पञ्चरत्नदर्पणं सदर्पणाय कल्पताम् ॥१८॥

इति श्रीमहर्षिरमणभगवत्पादानुध्यात-
श्रीभगवद्वासिष्ठगणपतिमुनेरन्तेवासिनः
भारद्वाजस्य विश्वेश्वरसूनोः
कपालिनः कृतिः
पञ्चरत्नदर्पणाख्या
पञ्चरत्नव्याख्या
समाप्ता

# ॥ श्रीरमणाश्रमपुस्तकालयम् ॥

## ॥ संस्कृतानि ॥

| | | | |
|---|---|---|---|
| श्रीरमणगीता | ० | ४ | ० |
| सद्दर्शनम् सभाष्यम्-श्रीरमणमहर्षिकृत द्राविडभाषाग्रन्थस्य गणपतिमुनि-कृतानुवादः सभाष्यः | ० | १२ | ० |
| उपदेशसारः-श्रीरमणमहर्षिभिः प्रणीतः | ० | ० | ६ |
| श्रीरमणाष्टोत्तरशतनामस्तोत्रम् | ० | ० | ६ |
| श्रीरमणचत्वारिंशत्-गणपतिमुनिकृतं स्तोत्रम् | ० | १ | ० |
| गीतमाला-गणपतिमुनिविरचिता | ० | ४ | ० |

## ॥ हिन्दी ॥

| | | | |
|---|---|---|---|
| श्रीरमणचरितामृत | १ | १२ | ० |
| श्रीमहर्षि-११२ चित्रों के सहित | ० | ८ | ० |
| मैं कौन हूँ | ० | २ | ० |

## ॥ मराठी ॥

| | | | |
|---|---|---|---|
| श्रीरमणप्रस्थानत्रयी | १ | ४ | ० |

मिलने का पता—

श्रीनिरञ्जनानन्दस्वामी
सर्वाधिकारी, श्रीरमणाश्रमम्
तिरुवण्णामलै. [दक्षिण भारत]